❀ श्रीश्रीगौरहरिर्जयति ❀

# ग्रन्थरत्नत्रयम्

श्रीवृन्दाबनदासेन विरचितं ब्रह्माण्डपुराणोक्तश्रीकृष्ण-
शताष्टोत्तरस्तोत्रस्य श्रीगौतमीयतन्त्रोक्तश्री-
गोपालस्तवराजस्य च भाष्यम् ।
श्रीश्री नारायणभट्टविरचित-
श्रीलाडिलेयाष्टकेन
समलङ्कृतम्






प्रकाशकः—

**बाबा कृष्णदासः**

कुसुमसरोवरनिवासी (मथुरा)



श्रीविजयादशमी
सम्वत् - २०१७ :



मूल्यम्
अर्द्धरूप्यकम्

॥ श्रीश्रीगौरहरिर्जयति ॥

अस्ति निखिलब्रह्माण्डेषु भगवच्छ्रीगोविन्ददेवस्य प्रशासयितृत्वम् । सर्वावतारकारणस्वरूपः यः समस्तसुखारामे परमधाम्नि रमोमाजभूतनाथादिवन्दितरजःकणिकासौभाग्ये गोलोकवैचित्र्ये श्रीवृन्दाबने योगपीठे स्वर्णरत्नमयसिंहासने कल्पबृक्षाणां सुशितलच्छाये इन्दिरादिमृग्यसौन्दर्य्यनखाञ्चलद्युतिभिः ब्रजकिशोरीघटाभिः नित्यतया विराजितः लीलारसास्वादं करोति स्म । सच्चिदानन्दघनः सः गोविन्दः कदाचित् वज्रनाभेण लीलया विग्रहरूपेण कदा वा श्रीरूपगोस्वामिना दर्शनानन्दप्रदानेन निजभक्तानां प्रतिपालयितुं तेनैव रूपेण प्रगटोऽभूत् । आगमनिगमकर्त्तारः महर्षयः यं गोविन्दं अष्टादशाक्षरदशाक्षरादिमन्त्रैरर्च्चयितुं विधिंपरिदर्शयन्ति स्म, तन्नाममंत्रजपादिकं तत्प्राप्तेःमहदुपायः तन्मंत्रजपान्ते तच्छताष्टोतरनामपठनं तथा तत् स्तबस्य पाठं कृत्वा जपादिसमये ध्यानमितिद्वयं परमावश्यकं द्वयमेव मंत्रांगम् । ययोर्विना मन्त्रजपं निष्फलं स्यात् । गोपालमन्त्रविधायकं मूलग्रन्थं गौतमीयतन्त्रम् । तत्रैव ध्यानादिप्रसंगे गोपालस्तवराजोऽयं विद्यते, शताष्टोत्तरनामस्तोत्रं ब्रह्माण्डपुराणे च । गौरांगमहाप्रभुवीथिपथिकवरः निगमागमज्ञातचरः छन्दःकौस्तुभग्रन्थकारः श्रीराधादामोदरशिष्यप्रवरः गोविन्दभाष्यकर्त्तृ वलदेवविद्याभूषणपादस्य गुरुभ्राता श्रीबृन्दाबनदासोऽयं द्वयोर्वोधगम्यार्थं स्वसम्प्रदायानुसारिणा भाष्यं कृतवान् । 'लुक्कायितरूपेण स्थितौ यौ' भाष्यग्रन्थौ साम्प्रतं बृन्दाबनस्थराधारमणघेरानिवासिनः श्रीनीलमणिगोस्वामिनः सकाशात् स्वर्णरत्नयोर्बृष्टिरिव प्राप्तौ अभूताम् । गोपालस्तवराजभाष्यस्य लिपीरेका श्रीयमुनावल्लभगोस्वामिनः ग्रन्थागारतः प्राप्ता । शताष्टोत्तरभाष्यस्य गोपीनाथवागनिवासिना श्रीपुरुषोत्तमदासबाबाजीमहाराजेन पाण्डुलिपिं कृत्वा प्रदत्तम् । प्रभुकृपातः द्वौ प्रकाश्यतां प्राप्तौ च । श्रीगोपालमन्त्रराजस्योपासकाः इमौ भाष्यौ परिशीलयन्तु एषा मम महती आशा ।

कृष्णदासः

श्रीश्रीगुरुगौराङ्गौ जयतः ।

# श्रीब्रह्माण्डपुराणोक्त-
# श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम् ।



श्रीकृष्णाय नमः ।

लक्ष्मीवान् प्रणतैकबन्धुरतसीपुष्पप्रभश्चिद्घनो
राकाचंद्रमुखः सरोजनयनो गांगेयगौरांवरः ।
सर्वेशो जगदेकहेतुरखिलैः शक्तिव्रजैः सेवितः
स्वार्चिर्ध्वस्ततमाः समस्तफलदो जीयात्स कृष्णः प्रभुः ॥

नित्यं निवसतु हृदये चैतन्यात्मा मुरारिर्नः ।
निरवद्यो निर्वृतिमान् गजपतिरनुकम्पया यस्य ॥

अष्टोत्तरशतनाम्ने नमो नमः कृष्णदेवताय स्तुस्तात् ।
पठिताद्यस्माल्लोकः श्रुताच्च निखिलामवाप्नुयात् सिद्धिम् ॥

श्रीकृष्णो जयति ।

श्रीधरण्युवाच

शेष शेष महाबाहो धृतास्मि तव मूर्धनि ।
पूतास्मि कृत--कृत्यास्मि त्वयैव विधृता पुरा ॥१॥

भगवद्गीतामुपनिषदमर्जुनः श्रुत्वा तदा भगवतो गुण-कर्माणि नित्यानि विनिश्चित्य तैः प्रवृत्तिनिमित्तैरष्टाधिकानि शत-नामानि तस्य निवबन्ध स्वनित्यपाठाय तत् प्रेम्णोल्लसन् । भगवत् प्रियं शेषदेवंप्रति श्रावयामास । तान्येव श्रोतुं श्रीवराहभगवन्महिषी

भूदेवी शेषं पृच्छति । शेष शेषेत्यादरनिर्भराद्वीप्सा तव मूर्धन्यहं धृतास्मि, परमभक्तस्य ते स्पर्शादहं पूतास्मि त्वत् कृताद्धारणादहं कृतकृत्यास्मि निखिलधारणे क्षमास्मि अन्यथा पातालांभसि निमग्ना स्यामीत्यर्थः । त्वयैवेति यथेदानीमाधारयसि तथा पुरा पूर्वसृष्टौ च त्वमेवमाधृतवानित्यर्थः ॥१॥

**नानाचलाम्बुधि-प्राणतीर्थ-लोकवनैर्युता ।**
**पञ्चाशत् कोटि-विस्तीर्णा त्वयाहं लीलया धृता ॥२॥**

त्वया धृताहं किंभूतेत्यत्राह नानेति । नानाविधैरचलैर्हिमवद्विंध्यादिभिरसंख्यैर्गिरिभिः, अम्बुधिभिः सप्तभिः समुद्रैः, प्राणैर्देव-मानवादिभिरसंख्ययैर्जीवव्यूहैः तीर्थैर्गंगा-गया-पुष्करादिभिः, लोकैर्बहुधैर्वेदैर्वनैश्च दण्डकाद्यैर्युता विशिष्टा पंचाशत् कोटियोजनतया विस्तीर्णाहं त्वया शेषेण लीलयाऽश्रमेण धृतेति कस्ते बलं शक्नुयाद्वक्तुमित्यर्थः ॥२॥

**सहस्रमौलिमुकुटा नानारत्नाद्यलंकृता ।**
**बहुवर्णमयी चित्रा जाताहं जगतीतले ॥३॥**

सहस्रमौलिर्महाविष्णुर्मुकुटं यस्याः सातद्धाहमित्यर्थः। बहुवर्णमयी नीलपीतादिरूपसप्तकयुता "वर्णो द्विजादौ शुक्लादाविति विश्वः" चित्रा नानाचलादिमत्तयात्याश्चर्यरूपा।" चित्रं तु कर्बुराठयोस्त्रिष्विति" श्रीधरः । जगतीतले ब्रह्माण्डेऽहं सहस्रमौलिना जाता सृष्टा । जगती जगतिदमायां छन्दो भेदे जनेपि चेति श्रीधरः ॥३॥

**महावराहेण पुरा दंष्ट्राग्रेण क्वचिद्धृता ।**
**धृता त्वयाति विस्तीर्णा शिरोभिर्लीलया सदा ॥४॥**

क्वचिद्धिरण्याक्षवधावसरे महावराहेण भगवता पातालाम्भसि निमग्नाहमुद्धृत्य स्वदंष्ट्राग्रेण शशिना लांछनकलेव

धृता । त्वया तु सदैव शिरोभिर्धृताहमिति तव मयि महानुपकारः ॥४॥

**मम भारावतारार्थमवतीर्णेन विष्णुना ।**
**सह त्वमवतीर्णोसि सर्वदा सर्वमूर्तिषु ॥५॥**

शेषं स्तौति ममेति द्वाभ्याम् । रावणाद्यैः कंसाद्यैश्च दुष्टैर्भारभूतैर्यदा यदा पीडिताहमभूवं तदा मद्भारोत्तारायावतीर्णेन विष्णुना श्रीरघुनाथेन श्रीकृष्णेन च सह त्वं च मद्भारोत्तारार्थमवतीर्णोसि । सौमित्रि–रौहिणेयवपुर्मत्कृपालुः । वर्तमानसामीप्ये वर्तमानवद्वेति सूत्राद्भूतेपि लट् । न केवलं द्विरेव तवावतारः, अपितु सर्वमूर्तिषु श्रीनृसिंहादिषु चावतारस्तु सर्वदैवेति नित्यं तत् साहित्यं सूचितम् । यद्यपि शेषो गरुड-विष्वक्सेनादिवन्नित्यमुक्तस्तत्पार्षदो जीव एव सौमित्री रौहिणेयश्च संकर्षणो व्यूहः परेशस्तथापि तदभेदस्तदावेशादेव । एतच्च तस्यैव शासनादित्यादिना व्यंजयिष्यति ॥५॥

**शय्यासन-परिधान-पादुका-छत्र-चामरैः ।**
**किं नाभूस्तस्य देवस्य मूर्तिभेदैश्चमूर्तिषु ॥६॥**

तेन सहावतारे हेतुत्वेनाह शय्येति । तस्य देवस्यमूर्तिष्ववतरन्तीषु शय्यादिभिर्मूर्तिभेदैस्त्वं तस्य किमुपकरणं नाभूरपि तत् शय्यादि-रूपं सर्वमभूरित्यर्थः । अतस्तेन साधं सर्वदैव तवावतारः सिद्धः ॥६॥

**धरण्या देवदेव्या च सादरं पृच्छमानया ।**
**इत्थं निगदितः शेषः प्रणम्य प्रत्युवाचताम् ॥७॥**

देवदेव्या श्रीवराहपट्टमहिष्या धरण्या सादरं स स्तवं यथा भवतीत्थं पृच्छमानया कृतप्रश्नया निगदितः शेषस्तां धरणीं प्रत्युवाच । स्तुतिस्तस्याः समुदीरयन् ॥७॥

श्रीशेष उवाच

**विश्वम्भरे नमस्तुभ्यं विश्वोत्पादनसाधने ।**
**विश्वात्मकाग्रमहिषि विश्लोकनमस्कृते ॥८॥**

विश्वानि सर्वाणि विभर्षीति विश्वम्भरा, तत्संबोधने हे भूदेवि ! "भूर्भूमिरचलानन्ता रसा विश्वम्भरा स्थिरे"त्यमरः । तुभ्यं मे नमोस्तु । विश्वेषां प्राणिनां यदुत्पादनं जननं स्वामिनश्चिकीर्षितं तत् साधयसीति तत् संबोधने तथा । त्वदधिष्ठितायाः पृथिव्याः परिणामः खलु प्राणिनां काय-निकाय इति भावः । विश्वात्मकस्य श्रीवराहस्य विष्णोरग्रगण्या महिषी कृताऽभिषेका-राज्ञी त्वमसि तत् संबोधने तथा॥ ८॥

**त्वं माता सर्वभूतानां मन्दानां मादृशामपि ।**
**भर्ता कर्ता नियन्ता च साक्षान्नारायणो विभुः ॥९॥**

यतस्त्वं जगत्पितु विष्णोर्महिषी, अतः सर्वभूतानां मातासि । मादृशामपि मन्दानामिति भक्त्युत्थाद्दैन्यादुक्तम् । साक्षान्नारायणस्त्वत्पतिर्वराहदेवः सर्वभूतानां भर्ता पालको धारकश्च कर्ता जनको नियन्ता च संकल्पेनैव भवति । विभुर्व्यापी ॥९॥

**तस्यैव शासनाद्देवि तद्बलात्त्वां वसुन्धरे ।**
**वहामि वरदे नित्यमाज्ञापय करोमि किम् ॥१०॥**

तस्यैव सर्वेशस्य नारायणस्य शासनादाज्ञातस्तद्बलात्तस्यैव सामर्थ्यात्तप्तायः पिण्ड न्याये तमपि संक्रातान्नित्यमुक्तस्तद् भृत्यो जीवोप्यहमुक्तलक्षणां त्वां पुष्पगुच्छवद्वहामि मूर्ध्नि धारयामि । तद्बलेन विना त्वामहं वोढुं कथं क्षमः । हे वसुन्धरे ! हे वरारोहे ! सुश्रोणि त्वमाज्ञापय किमहं करोमि कुर्याम् ॥१०॥

श्रीधरण्युवाच

**कृष्णावतारे रोहिण्यां रामेणापि त्वया सह ।**
**अलंकृतं जन्म पुंसामपि नन्दव्रजौकसाम् ॥११॥**

शेषेणैवमुक्ता धरण्युवाच कृष्णेति । रोहिण्यां जातेन रामेण बलदेवेन त्वया त्वदंशिना सह स्वयं भगवतः कृष्णस्यावतारे सति नन्दव्रजौकसां पुंसां जन्मालंकृतम् । अपिना तदन्तिकस्यानां तत्रागतानां च । त्वदंशिरामसमवेतस्य कृष्णस्य दर्शनादिना ते सर्वे सफलजन्मानोऽभूवन्निति ॥११॥

**तस्य देवस्य कृष्णस्य लीलाविग्रहधारिणः ।**
**जयोपाधिनिमित्तानि सन्ति नामान्यनेकशः ॥१२॥**

तद्गुण-कर्म-संबद्धानि तन्नामानि संश्राव्य मज्जन्म-सफलं कुर्विति भावेनाह तस्येति । देवस्य सर्वाराध्यस्य प्रदीप्तस्यानन्द-मत्तस्य विचित्रक्रीडस्याति-मनोज्ञस्य दुर्वृत्तान् जिघांसोः कृष्णस्य मद्भर्तुर्वराहस्याप्यंशिनः लीलाविग्रहं क्रीडाविस्तारं क्रीडाविभागं क्रीडासंग्रामं विधास्यतीति तस्य । "विग्रहः समरे काये विस्तार-प्रविभागयोरिति" विश्वः । गोकुलादिस्थानभेदात् क्रीडाहि विभक्तास्तेन धृताः । जयोपाधयः प्रवृत्तौ निमित्तानि येषां तथा भूतान्यनेकानि बहूनि नामानि तस्य सन्ति । जयाः पराक्रमाः । उपाधयो रहस्यलीलाः । उपाधिक्येनाधीयतेऽर्थ्यते मनराभिरिति निरुक्तेः । उपसर्गेघोःकिरिति सूत्रादाङ् पूर्वाद्धाञो किः प्रत्ययः

**मुख्यानि तेषु नामानि श्रोतुकामा चिरादहम् ।**
**तत्तानि ब्रूहि नामानि वासुदेवस्य वासुके ।**
**नातः परतरं पुण्यं त्रिषु लोकेषु मे क्वचित् ॥१३॥**

तेषु मध्ये यानि नामानि मुख्यान्यतिप्रसिद्धानि तान्यहं चिरात् श्रोतुकामास्मि । वासुदेवस्य वेदवादेषु निवसतो भगवतः कृष्णस्य, हे वासुके शेषदेव ! यद्यपि सहस्र-शिरा नागाधिपः शेषः सर्पाधिपादेकशिरसो वासुकेरन्यस्तथापि सौहार्दातिशयेन तस्य

तदभेदोपचारात्तन्नाम्ना संबोधनमिति व्याख्यातारः । नात इति । अतः कृष्णनाम श्रवणात् परतरमतिश्रेष्ठं पुण्यं शुद्धिकरं कमनीयतमं वस्तु त्रिषु लोकेषु मे क्वचिन्नास्ति पुण्यं तु चार्वपीत्यमरः

श्रीशेष उवाच

**वसुन्धरे वरारोहे जनानामाशु मुक्तिदम् ।**
**सर्वमङ्गलमूर्धन्यमणिमाद्यष्टसिद्धिदम् ॥१४॥**

एवं धरण्या प्रेरितः शेषोऽतिहृष्टो वक्ष्यमाणस्याष्टोत्तरशतनाम्नः स्तोत्रस्य महिमानं तदेकनाम-फल-कीर्तनेनाह वसुन्धरे इति त्रिभिः । आशु पाठमात्रेणैव मुक्तिदम् । "कृष्णः कृष्णः कृष्णः इत्यन्तकाले जल्पन् जन्तुर्जीवितं यो जहाति । आद्यः शब्दः कल्पते तस्य मुक्त्यै व्रीडा-नम्रौ तिष्ठातोद्वा वृणस्थावित्यादि" स्मरणात् । सर्वेषां मङ्गलानामग्निहोत्रदर्श-पौर्णमासादीनां मूर्ध्यन्यं प्रधानभूतं कृष्णनाम्नैव तेषामंगवैकल्यपरिक्षयादुक्तफलोदयाच्च । "यस्य स्मृत्या च नामोक्त्या तपोयज्ञ-क्रियादिषु । न्यूनं संपूर्णतामेति सद्यो वन्दे तमच्युतमित्यादि" स्मरणात् । स्फुटमन्यत् ॥१४॥

**सर्वापराधकोटिघ्नं सर्वतीर्थफलप्रदम् ।**
**समस्त--जपयज्ञानां फलदं पापनाशनम् ॥१५॥**

सर्वेषां नामि विषयाणां नाम विषयाणां चापराधा नामावृत्त्या जातानां कोटिं हंतीति तत् । एवमुक्तं पाद्मे नारदं प्रति सनत्कुमारेण "सर्वापराधकृदपि मुच्यते हरिसंश्रयः । हरेरप्यपराधान् यः कुर्याद्द्विपदपांसुनः । नामाश्रयः कदाचित् स्यात् तरत्येव स नामतः । नाम्नोपि सर्वसुहृदोत्यपराधात् पतत्यधः । नामापराध युक्तानां नामान्येव हरन्त्यघम् । अविश्रान्ति प्रयुक्तानि तान्येवार्थ कराणि यदिति" । समस्तानां जपयज्ञाना वेदजपानां फलदं तत्

सारत्वात् । "मधुरमधुरमेतन्मङ्गलं मङ्गलानां सकलनिगमवल्ली-सत्फलं चित्स्वरूपमि"त्यादि स्मरणात् । पापानां निखिलानां नाशकम् । "कृष्णेति मङ्गलंनाम यस्य वाचि प्रवर्तते । भस्मीभवन्ति तस्याशु महापातक कोटय इत्यादि स्मृतिभ्यः ॥१५॥

**सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत्फलम् ।**
**एकावृत्त्या तु कृष्णस्य नामैकं तत् प्रयच्छति ॥१६॥**

अथासाधारणं प्रभावमाह सहस्रेति । भारतोक्तानां पाद्मोक्तानां च विष्णुसहस्रनाम्नां त्रिरावृत्त्या यदभ्युदयनिश्रेयसलक्षणं फलं तत् कृष्णस्यैकं नाम प्रयच्छति । कृष्णावतारसंबंध्ये तत् स्तोत्रगतमेकमेव नाम एकावृत्त्या सकृदुच्चरितं सन्नामापराध-शून्याय तदुच्चारकाय ददाति । "अपराधविमुक्तोहि नाम्नि यत्नं समाचर । नाम्नैव तव देवर्षे सर्वं सेत्स्यति नान्यत" इति पाद्म एवं तं प्रति तद्वाक्यात् । नत्वत्र त्रिरावृत्तस्य सहस्रनाम्नः फल-मेकावृत्त-कृष्णनाम्नः पठितम् । पाद्मेत्वेकावृत्तस्य सहस्रनाम्नः फलं रामनाम्नः पठ्यते । "विष्णोरेकैक-नामापि सर्ववेदाधिकं मतम् । तादृग् नाम सहस्रेण रामनाम समं स्मृतमिति" । "राम रामेति रामेति रमे रामे मनोरमे । सहस्रनाम तत्तुल्यं रामनाम वरानने" इति च । "तारकाज्जायते मुक्तिः प्रेमभक्तिस्तु पारका-दिति" च तत्रैवोक्तम् । किं कृष्ण रामयोस्तन्नाम्नोश्च किञ्च-दन्तरमस्तीति चेदुच्यते । नैवास्त्यन्तरम् । तथापि शक्तिव्यक्ति-तारतम्यादिदं पठन्ति । अनन्यापेक्षिरूपे कृष्णे निखिल-शक्ति-व्यक्ते स्वनाम्नो महिमा तथोक्तः । तस्यैवानभिव्यक्ताखिलशक्तेः रामत्वे सति तन्नाम्नो महिमेत्थमुच्यते न तु वस्तुभेदगंधः । नत्वत्र-त्यानां केषांचिन्नाम्नां तेषु तेषु च सत्त्वादे तत् पद्यगतो महिमा न सङ्गच्छते इति चेदुच्यते । तदानुपूर्वी घटितादे तदानुपूर्वी घटित-

मन्यदेव स्मृति परिदृष्ट-श्रुतिवाक्याद्भगवद्वाक्यान्तराद्भगवद्गीत वच्च । तत्र विलासत्व-व्यूहत्वादि-विशिष्टस्य कृष्णस्य नामान्यत्र तु कृष्णत्वेनैव विशिष्टस्य तस्येति भेदाभावेपि भेद-व्यवहारः सत्ता सतीकालः सर्वदास्तीत्यादिवद्विशेषबलादभ्युपेयः । अत्राधिकजिज्ञासा चेत् कृष्णसन्दर्भ-भाष्यपीठकादिकं द्रष्टव्यम् ॥१६॥

**तस्मात् पुण्यतमं चैतत् स्तोत्रं पाप--पलायनम् ।**
**शृणु देवि प्रवक्ष्यामि नाम्नामष्टोत्तरं शतम् ॥१७॥**

तस्मादिति । उक्त-माहात्म्यवृन्दाद्धेतोः पुण्यतममतिशुद्धिकरमतिरम्यं च । स्फुटार्थमन्यत् ॥१७॥

**ॐ श्रीकृष्णाष्टोत्तरशतनाम्नामनुष्टुप् छन्दः । शेषो भगवानृषिः । श्रीकृष्णः परमात्मा देवता । क्लीं कमलानाथेति शक्तिः । मम श्रीकृष्ण-प्रसाद-सिद्ध्यर्थे जपे विनियोगः ।**

**ॐ श्रीकृष्णः कमलानाथो वासुदेवः सनातनः ।**
**वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥१८॥**

स्तोत्रस्य छन्द आदीन्याह । ओमित्यादि प्रकटार्थम् । ओमिति । अस्य स्तोत्रस्यादा वन्ते च प्रणवोस्ति । एवमाह मनुः- ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा । क्षरत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यत इति । व्रजो मथुरा द्वारका चेति त्रिधामा कृष्णः स्वयंत्वसाम्यातिशयस्त्र्यधीश इति स्मरणात् । त्रिधाम्नस्तस्य नामान्यत्र वर्णयानि बोध्यानि । तानि यथा श्रिया महालक्ष्म्या राधया विशिष्टः कृष्णः श्रीकृष्णः । पुरुषबोधिन्यां-"गोकुलाख्ये माथुरमण्डले:" इत्यारभ्य "द्वे पार्श्वे चन्द्रावली राधिका" चेत्युक्त्वा यस्या अंशे ॥

लक्ष्मी दुर्गादिका शक्तिरित्य"भिधानात् । "देवी कृष्णमयी प्रोक्ता राधिका परदेवता । सर्वलक्ष्मीमयी सर्वकान्तिः

सम्मोहिनी परेति" गौतमीयवचनात्। "निरस्त-साम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नम" इति श्रीशुकोक्तेश्च। कमलाया रुक्मिण्या नाथः स्वामीति कमलानाथः। "राघवत्वेऽभवत् सीता रुक्मिणी कृष्ण-जन्मनीति" श्रीविष्णुपुराणात्। विशुद्ध-सत्त्वाविर्भावित्वाद्वादेषु वेद्य तथा स्थितत्वाद्वा वासुदेवः। "सत्त्वं विशुद्धं वसुदेवशब्दितं तदीयते तत्र पुमानपावृत" इति श्रीभागवतात्। "वसनादेव वादे च वासुदेवेति शब्दित इति" श्रीहरिवंशाच्च। तत्त्व-बुभुत्सु कथावादः। नित्यैक-रस-स्वरूप-गुण विभूतिकत्वात् सनातनः। "शाश्वतश्च ध्रुवो नित्यं सदातनः सनातन" इत्यमरः। वसुदेवस्यानकदुन्दुभेरात्मनश्चित्तादप्रच्युत-स्वभावतया देवक्यां जायत इति वसुदेवात्मजः। "ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी। दधार सर्वात्मकमात्मभूतं काष्ठा यथानन्दकरं मनस्त"। "देवक्यां देव-रूपिण्यां विष्णुः सर्व-गुहाशयः। आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कल" इति श्रीभागवतात्। पुनाति स्मर्तॄनिति पुण्यः। पुण्योयस्मुग्धस्य श्चेति स्मरणात्। लीलानुरक्तो मानुषो मनुष्य-सन्निवेशी मनुष्य-चेष्टा-बहुलश्च विज्ञानानन्दघनो विग्रहो यस्य स लीलामानुषविग्रहः। शाकपार्थिवादित्वान्मध्यमपदलोपीसमासः। मानुषेषु भव मानुषं मनुष्य-संस्थानं मनुष्य कर्म च। ऋगयनादित्वादण् ह्यपवादः। तद्योगाद्विज्ञानानन्दोपि विग्रहो मानुषः। श्रुतिश्च- "सत्पुण्डरीक-नयनं मेघाभं वैद्युताम्बरम्। द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरम्"। "तमेकं गोविन्दं सच्चिदानन्दविग्रहमिति"। स्मृतिश्च- "यत्रावतीर्णं कृष्णाख्यं परंब्रह्म नराकृतीति"। न हि नराकारः स्वर्ण-पिण्डो नरः। सच्चिदानन्दविग्रह इति वक्ष्यति ॥१८॥

**श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः।**
**चतुर्भुजात्तचक्रासि-गदा-पद्माद्युदायुधः ॥१९॥**

श्रीवत्सकौस्तुभावसाधारणौ नित्यं धरतीति तथा । यशोदा जननीत्वाद्वत्सला यत्र स यशोदावत्सलः । "नन्द-गोप-गृहे जातो यशोदा-गर्भ-संभव" इत्यादि-पुराणे नारदोक्तेः । यशोदायां मातरि वात्सल्याच्च तथेत्यपरेस्मर्तृ-पाप-हरणाद्धरिः । ,'हरति स्मर्तॄणां पापं ततो हरिरिति स्मृत इति" हरिवंशे हरवाक्यात्। मनोहरत्वाद्वेत्येके । चतुर्भिर्भुजैरात्तानि गृहीतानि चक्रादीन्युद्यतान्यायुधानि येन सः । दुष्टनिघाताय सर्वदोद्यत इत्यर्थः ॥१६॥

**देवकीनन्दनः श्रीशो नन्दगोप-प्रियात्मजः ।**

**यमुनावेग-संहारी बलभद्र-प्रियानुजः ॥२०॥**

देवकीं जनयित्रीं प्रहर्षयन् देवकीनन्दनः । श्रीणां नित्यप्रियाणां बल्लवीनां पट्टमहिषीणां च स्वामीति श्रीशः । "गोप्यो लब्ध्वा-च्युतं कान्तं श्रिय एकान्तवल्लभम्" । "लक्ष्मी-सहस्रशत-संभ्रम-सेव्यमानं गोविन्दमादिपुरुषं तमहं भजामीति" स्मरणात् "रेमे रमाभिर्निजकामसंप्लुत" इति स्मरणाच्च । नन्दगोपस्य व्रजेश्वरस्य प्रियः प्रीतिकर्ता चासावात्मनस्तच्चित्ताद्यशोदायां तत पत्न्यां जातश्चेति तथा । "नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः,'पशुपा-ङ्गजाय' 'गोपिका-सुत' इत्यादि वाक्यात् । नन्विह यशोदायां देवक्यां च कृष्णस्य जन्मोक्तं तदिदं स्फुटार्थविरुद्धमिति चेन्मैवम् । "निशीथे तम उद्भूते जायमाने जनार्दने । देवक्यां देव- रूपिण्यामित्यादिना" मुनीन्द्रेणाप्युभयत्र तज्जन्मनोभिधानात्, देवक्यां यशोदायां जनार्दने जायमाने सति देवक्यां देवकसुतायां विष्णुराविरासीदिति तत्रार्थः। यशोदानी देवकीत्युच्यते । अस्माकं पूर्वाचार्याणामिदमेव मतम्। "द्वे नाम विनन्दभार्याया यशोदा देवकीति चे" त्यादिपुराणात्। "यशोदा ननन्दत्नी च जातं परमबुध्यत । न तल्लिंगं परिश्रांता

निद्रयापगतस्मृति"रित्यग्रे स्फुटी-करणाच्च । नन्दपत्नी च परं परेशं स्व-गर्भाज्जातमबुध्यत । तस्य वसुदेवागमादेर्लिंगं चिह्नं नाबुध्यत । तत्र हेतुः परीत्यादिः । एवं च नन्दस्त्वात्मज इत्यादिकं सूपपन्नम् । उपगुह्यात्मजामित्यादिवद्गौणात्मजत्वशंका च निरस्ता । तस्मिन् यशोदासुते देवकीसुतस्यैक्यात्तदेकस्य तस्य मथुरादौ गमनादन्तरान्तरा व्रजे चागमनात् स्फुटार्थेपि न संशय-लेशः । एकस्यानेकतयाभिव्यक्तिः पुनरैक्यं च रासे ब्रह्ममोहनादौ च प्रसिद्धेः । देव-रुपिण्यामित्युक्तेस्तद्गर्भसंबन्धोपि हरेर्न दोषावहः । यमुनाया वेगं प्रवाहं संहरति वेणुनादेन स्तंभयतीति तथा । क्वचिद्विष-संहारीति पाठः । यमुनातः कालिय-गरलापनयनात्तथा । "तदैव सामृतजला यमुना निर्विषाभवत् । अनुग्रहाद्भगवतः क्रीडामानुष-रुपिणः" इति श्रीशुकोक्तेः । बल-भद्रस्य प्रियश्चासावनुजश्चेति तथा तदतिवात्सल्यपात्रमित्यर्थः ॥२०॥

**पूतना-जीवित-हरः शकटासुर-खण्डनः ।**
**नन्दव्रज-जनानन्दी सच्चिदानन्द-विग्रहः ॥२१॥**

अति-मनोज्ञां मूर्तिमति-वत्सलतां च कृत्रिमां प्रकटयंत्याः कंसेन प्रेषितायाः कपटिन्या राक्षस्याः पूतनाया निहन्तासंख्य-तोकाया विषयुक्तं स्तन्यं ददानाया जीवितं प्राणं हरति स्तन्येन साकमाकर्षति धात्री वेश-मात्रेण परितुष्टस्तस्यै धात्री-गतिं प्रयच्छन्निति तथा । "अहो बकीयं स्तनकालकूटं जिघांसयापाययदप्यसाध्वी । लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेमेति" श्री भागवतात् । शकटाविष्टं कंसभृत्यमसुरं प्रवाल-मृदुनांघ्रिणा स्पृशन् खण्डयति निरस्यंस्तदविद्यामिति तथा । नन्दस्य स्वपितुर्व्रजनाथस्य व्रजे निवसतो जनानानन्दयितुं शीलं

यस्य स तथा। "तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम्। गोपायेस्वात्म- योगेन सोयं मे व्रत आहित इति" तत् संकल्पवाक्यात्। संश्चासौ चिच्चासावानन्दश्चेति तथा-भूतो विग्रहो यस्य सः। यद्यपि देहदेहिभेदो न हरौ तथापि विशेष-सामर्थ्यात्तद्व्यवहारः। पुनः कर्मधारयो वा ॥२१॥

**नवनीत-विलिप्तांगो नवनीतनटोऽनघः।**

**नवनीत-लवाहारो मुचकुन्द-प्रसादकृत् ॥२२॥**

नवनीतैर्भुक्तावशिष्टैर्विलिप्तानि मुखोदरकररूपाण्यङ्गानि यस्य सः। मथनेन दध्नो विनिर्गमस्तत्-सारांशो नवनीतम्। "दधिसारं नवनीतमिति" हलायुधः। नवनीताय दधीनि मथ्नातीभिर्बल्लवीभिः प्रलोभितो नटति नृत्यतीति नवनीतनटः। गोपीभिः स्तोभितो नृत्यद्भगवान् बालवत् क्वचिदिति श्रीशुकोक्तेः। तथाभूतः स्मृतः कीर्तितश्च सः नः सर्वाणि पापानि हरतीत्यनघः। "यस्मिन्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने, विघ्नो यत्र निवेशितात्म-मनसां ब्राम्होपि लोकोऽल्पकः। मुक्तिं चेतसि यः स्थितोऽमल-धियां पुंसां ददात्यव्ययः, किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तित" इति- श्रीवैष्णवात्। नवनीत-लवोऽपि भक्त्यार्पित आहारो यस्य सः। प्रीत्यर्पिते स्वल्पेऽपि सतृष्ण इत्यर्थः। "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मन इति" तद्वाक्यात। मान्धातृपुत्रे कृतदेवाकार्ये देववराद्द्रिकन्दरे लब्धाति-निद्रे निद्राविघातकं कालयवनं दग्धवति मुचुकुन्दे मोक्षफलं कं प्रसादं करोतीति तथा॥ २२

**षोडश–स्त्री–सहस्रेशस्त्रिभङ्गी मधुराकृतिः।**

**शुकवागमृताब्धीन्दुर्गोविन्दो गो–विदां पतिः॥ २३ ॥**

भौमं निहत्यानीतानां षोडशानां राजकन्या-लक्षणानां स्त्रीसहस्राणां पतिरिति तथा । त्रिभंग्या ग्रीवा-कटि-पाद-गतेन वक्रिम-त्रयेन मधुरा रुचिराकृतिर्वपू रूपं च यस्य सः ।आकृतिस्तु स्त्रियां रूपे सामान्य-वपुषोरपीति मेदिनिकारः ।शुकवा श्रीभागवतं स एवामृताब्धिस्तदुत्थ इन्दुरिति तत् प्रतिपाद्य स्वरूप-गुण-लीलायाथात्म्यः स्वयं भगवानित्यर्थः ।गवामिन्द्रवाद्वेदवाग्विज्ञत्वाच्च गोविन्दः । "अहं किलेन्द्रो देवानां त्वं गवामिद्रतां गतः । गोविन्द इति लोकास्त्वां गास्यन्ति भुवि शाश्वतमिति" श्रीहरिवंशे कृष्णं प्रतीन्द्रवाक्यात् । गौरेषा च तथा वाणीं तां च विज्ञायते भवान् । गोविन्देति तथा देव-मुनिभिः कथ्यते भवानिति तत्रैव तं प्रति शिववाक्यात् । गो-भूमि-वेद-विदितत्वात्तथेत्यौपनिषदाः । गौः स्वर्गे च बलीबर्दे रम्ये च कुलिशे पुमान् । स्त्री-सौरभेयी-दृग्वाणदिग्वाग्भूष्वप्सु भूम्नि चेति मेदिनिकारः । गा लक्षणतो ये बिन्दन्ति जानन्ति तेषां गो-विदां गोपानां पतिर्गोपेश्वर इत्यर्थः ॥ २३ ॥




**वत्सवाटचरोऽनन्तो धेनुकासुरखण्डनः ।**
**तृणीकृत-तृणावर्तो यमलार्जुन-भञ्जनः ॥ २४ ॥**

वत्सानां वाटं पंथानं चरति गच्छति तान् पालयन्निति वत्सवाटचरः । वाटो वृत्तौ च मार्गं चेति विश्वः । नास्त्यंतोति मनोज्ञो यस्मात् सोऽनन्तोऽविनाशित्वाद्वा । अन्तः प्रान्तेतिके नाशे स्वरूपेति मनोहरे इति विश्वः । खुराकारं धेनुकासुरं महाबलिनं सगणं बलदेवेनात्मना च खण्डयति तद्देह-खण्डनमिषेण तदविद्यां चापनयतीति सः । तृणीकृतस्तृणवदवज्ञातस्तृणावर्तो वात्यारूपी कंसकिङ्करो येन स तं मारयंस्तन्मुक्तिकृदित्यर्थः । नलकूवर-मणिग्राबाख्यौ मदिरामत्तौ देवर्षि-शापाद्युग्मीभूयार्जुनतरू सन्तौ

महोच्छ्रायौ ब्रजराजस्य गोपुराग्रतः स्थितौ तिर्यक् स्थितेनाकृष्यमाणेनोलूखलेन भनक्ति तच्छापजातं तयोस्तरुजन्मापनयन्निति तथा। "युग्मं युगं च युगलं द्वन्द्वं द्वितयं यमं यमलं चेति" हलायुधः॥ २४॥

**उत्ताल–नाल–भेत्ता च तमालश्यामलाकृतिः।**

**गोप–गोपी श्वरोयोगी कोटिसूर्यसमप्रभः॥ २५॥**

उत्तालान्नुन्नतान् तालान् भिनत्ति धेनुककोपयितुं सह बलः सन्निति तथा। "उत्तालमुन्नतेपीति" हलायुधः। तमालेति प्रकटार्थम्। गोपान् गोपीश्वाशु अश्नुते तच्चित्तस्थः सन् व्याप्नोतीति गोप–गोपीश्वरः। "अश्नुतेराशु कर्मणि वराडिति" सूत्रात्। अनेनोपधाया ईत्वं च। योगस्तैस्ताभिश्च नित्या संगतिरस्यास्तीति योगी। योगः संहननोपाय–संगति–ध्यान–युक्तिष्वित्यमरः। योगायोग–माया यस्यास्ति नित्यं स तथेत्येके। कोटि–सख्यानां सूर्याणामिव सहोदितानां प्रभा यस्य स तथा। सूर्य–कोटिर्यथा तिमिर-निरासकृत्तथैकः कृष्णः प्रपन्ने मायानिरासकृदित्येके। अन्ये तु मुख्यार्थमाहुः। न च तादृशस्य सेवा दुष्करा, सेवकानां च तत् समत्वात्। "निरञ्जनः परमं साम्यमुपैतीति" श्रुतेः, "मम साधर्म्यमागता" इति स्मृतेश्च, न हि रविसेवा रविसेवकानां दुष्करा, नापि सिंहसंगतिः सिंहडिंभानाम्। अपरे तु सहस्र-शिरस्कवेशस्तथेत्याहुः॥ २२॥

**इलापतिः परं ज्योति यादवेन्दो यदूद्वहः।**

**वनमाली पीतवासाः पारिजातापहारकः॥ २६॥**

इलाया ब्रजभूमेः सरस्वत्याश्च तुंगविद्यायाः पालकत्वादिलापतिः। "इला-गो-भूमि-पीयूषे-भारत्यां-सौम्य-योषितीति"

श्रीधरः। परं ज्योतिरिति सविशेषणमेकं नाम,ज्योतिश्चचैतन्यरूपः प्रकाशः। जीवेभ्यो भेदमाख्यातुं परमिति, "ज्योतिः क्लीवं खावग्नौ प्रकाशे दृशि तारके" इति श्रीधरः। श्रुतिश्चैवमाह स एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरूपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति। संप्रसादो मोक्ष-साधन-सपन्नो हरेरनुग्रहभाजनभूतो जीवः। संप्रसादेन यज्ज्योति-रूपसंपन्नं सतूत्तमः पुरुषो हरिरितिश्रुत्यर्थः। यादवेषु महर्षि निषेवितेषु मध्ये पारमैश्वर्यवत्त्वाद्यादवेन्द्रः, पारमैश्वर्यलक्षणया संपदा यादवान् पुष्णन् यदूद्वहः अर्जुनाय भगदत्तेन निक्षिप्तं नारायणास्त्रं तत् परित्राणाय प्रसारिते यस्य भक्तवत्सलस्योरसि वैजयन्ती भूत्वास्तीति वनमाली ह्यभौ ममासाद्यतं निहत्यानीता-दिति कुण्डलादिकः सभाभोगत्वेन्द्रलोकमदित्यादये कुण्डलादि प्रदाय भक्तैरर्पिता पत्रपुष्पमयी माला नित्यं यस्यास्ति स तथे-त्यपरे। पीते विद्युदुज्वले वाससी यस्य स पीतवासाः। अति सौभाग्याभिमानिन्याः सत्यभामाया देवर्ष्यर्पितं पारिजातं पुष्पं रुक्मिण्यै दत्तमिति श्रुत्वा रुष्टायाः प्रसादाय तया सहितो गरुड-मारूढ एवमुक्तं द्रोणपर्वणि "विसृष्टं भगदत्तेन तदस्त्रं सर्वघा-ति वै। उरसा प्रतिजग्राह पार्थं संच्छाद्य केशवः। वैजयन्त्यभवन् माला तदस्त्रं केशवोरसीति"। निर्जित्येन्द्रसैन्यं तद्वनात् पारिजा-तमपहरतीति तथा ॥ २६ ॥




**गोवर्धनाचलोद्धर्ता गोपालः सर्वपालकः।**
**अजो निरञ्जनः कामजनकः कञ्जलोचनः ॥ २७ ॥**

इन्द्रपूजायां विहितायां कुपितेनेन्द्रेण वज्रसहासारवर्षिणो-पद्रुतैर्व्रजजनैरभ्यर्थितस्तत् परिरक्षार्थं गोवर्धनाचलमुद्धे वामपाणे-रुपरि धारयंस्तथा तमुद्धृत्य गाः पालयन् गोपालः। सर्वान् व्रज-जनान् पालयन् सर्वपालकः। न जायते जीववद्धातुयोगेन किंत्ववि-

च्युतस्वरूपशक्तिकतया नन्दाद्यशोदायां वसुदेवाद्देवक्यां वाविर्भवति प्राच्यामिव पूर्णेन्दुरित्यजः । "अजायमानो बहुधा विजायत" इति श्रुतेः । अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममाययेति" तद्वाक्यात् । निशीथ इत्यादि शुकोक्तेश्च, यतोऽसौ निरञ्जनः । अञ्जनात्मायातो निर्गतस्तदस्पृष्ट इत्यर्थः । "विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थममोघवाञ्छितम् । स्वतेजसा नित्यनिरस्तमायागुणप्रवाहं भगवन्तमीमहीति" स्मरणात् । स्वरूपशक्त्या माया परिभवीत्यर्थः । कामं स्वेन सह संभोगेच्छां जनयति महर्षीणां तरुणी-भावेनेति कामजनकः । "पुरा महर्षयः सर्व दण्डकारण्यवासिनः । दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम् । ते सर्वे स्त्रीत्वमापन्ना समुद्भूताश्च गोकुले । हरिं संप्राप्य कामेन ततो मुक्ता भवार्णवादिति" पाद्मात् । ननु पुंसां स्त्रीभावः कथमिति चेदुच्यते । अणुचैतन्यस्य ज्ञस्य जीवस्य प्रसिद्धः पुमादिभावो न वास्तवः किंत्वौपाधिक एव । हरिप्रयत्तेरुपाधिविगमे स्वभावानुसारि-हरिसंकल्पात् स्वेष्टः स्त्रीभावः संभवीति फलाध्यायभाष्ये सविवेच्यः । प्रद्युम्नः प्रादुर्भावकत्वात्तथेत्यन्ये । कञ्जे पद्म-तुल्ये लोचने यस्य स कञ्जलोचनः । "यथा कप्यासं पुण्डरीकमेवमक्षिणी" इति श्रुतेः । कप्यासं रविकरविकसितमित्यर्थः । विकसितारविन्दनेत्रः पूर्णानुग्रहशीलश्चेत्यर्थः । अन्यस्य विधिरुद्रादेरपूर्णस्य कमाक्रोधाविष्टस्य नेदृशनेत्रत्वमिति भावः ॥ २७ ॥

मधुहा मथुरानाथो द्वारकानायको बली
वृन्दावनान्तसंचारी तुलसीदामभूषणः ॥२८॥

मधुं स्वप्रपन्नानामविद्यां हतवानिति मधुहा । मधुः संसारनामेति ततो मधुनिषूदन इति श्रीहरिवंशे हरवाक्यात् । "दैवीह्येषा

गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति तद्वाक्याच्च। हयग्रीववपुषा मधुदैत्यं हतवानित्यर्थस्त्वप्रकृतत्वान्नात्रोपात्तः। आर्षोऽत्र क्विप् प्रत्ययः। मथुराया रूढिलक्षणया तद्वासिनां च स्वामी वाञ्छितपूरकश्च सन् मथुरानाथः। द्वारकायाः कुशस्थल्यास्तद्वासिनां च प्रभूरिति द्वारकानायकः। "अधिभूर्नायको नेता प्रभुः परिवृढोधिप" इत्यमरः। बलानि षट् पञ्चाशत् कोटयो यदुवीरा देहादि-पाटवानि चानन्तानि यस्य नित्यं संति स बली। बृन्दावनस्यान्ते मध्ये संचरितुं शीलमस्य स तथा। तुलसीदलकृतानि दामानि भूषणानि यस्य स तथा बृन्दायामतिप्रीतिमानित्यर्थः ॥२८॥

**स्यमन्तकमणेर्हर्ता नरनारायणात्मकः।**
**कुब्जाकृष्टांबरधरो मायी परमपुरुषः ॥२९॥**

स्यमन्तकस्य मणेर्हर्ता कंसप्रेषितं शंखचूडं यक्षं निहत्य तस्मात्तमानीतवान्। जाम्बवन्तं निर्जित्य तेन स्वकन्यया सहार्पितं तमाहृतवान् वेत्यर्थः। नरनारायणौ धर्मपुत्रौ भारतवर्षकल्याणाय वदर्यां तपस्यन्तावात्मभूताववतारौ यस्य स तथा। रूपमोहितया कंसदास्या कुब्जयाकृष्टमुत्तरीयं धारयंस्तथा। मायीत्यादिविशिष्टमेकं नाम। माया तमः शब्दवाच्या मूलप्रकृति-नियम्यतया यस्यास्ति स मायी। परात्मिका मा लक्ष्मीर्यस्य स परमः स चासौ पुरुषश्चेति पुरुषोत्तमः सर्वेश्वर इत्यर्थः। "यस्मात् क्षरमतीतोहमक्षरादपिचोत्तमः। अतोस्मिंल्लोके वेदे च प्रथितः पुरुषोत्तम" इति तद्वाक्यात् ॥२९॥

**मुष्टिकासुरचाणूरमल्लयुद्धविशारदः।**
**संसार-वैरी कंसारिर्मुरारिर्नरकान्तकः ॥३०॥**

मुष्टिकासुरेण चाणूरेण मल्लेन च सह युद्धे विशारदोऽति

निपुणः। बलभद्रेण मुष्टिकमात्मना चाणूरं च हतवानित्यर्थः। ध्यातृणामविद्यां विनाशयन् संसारवैरी, कंसनिघ्नन् कंसारिः, पंचशिखं भौमामात्यं मुरं निघ्नन् मुरारिः, नरकस्य भूमिपुत्रस्यादित्याः कुण्डले तत् पुत्रस्येन्द्रस्य छत्रमणिपर्वतौ च हृतवतोऽतिबलिष्ठस्यान्तो नाशो यस्मादिन्द्रप्रार्थितात् स नरकान्तकः ॥३०॥

**अनादिर्ब्रह्मचारी च कृष्णाव्यसनकर्षकः।**
**शिशुपालशिरच्छेत्ता दुर्योधनकुलान्तकः ॥३१॥**

न विद्यते आदिः पूर्वकोटिर्यस्य सोऽनादिः पुरातन इत्यर्थः। ब्रह्मणि स्वस्वरूपे चरितुं वर्तितुं शीलमस्य ब्रह्मचारी। ननु बहूषु बल्लवीषु पट्टमहिषीषु च निरतस्य कृष्णस्य कथं तादृग्ब्रह्मचारित्वमिति चेदुच्यते। पराख्यस्वरूपशक्त्याविर्भावभूताभिस्ताभिः सह तत् प्रेमाकृष्टतया रमणे स्वारामत्वाच्यावात्। परा च स्वरूपानुबंधिन्येव। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान-बल-क्रिया" चेति मंत्रवर्णात्। एवमेव गोपालतापन्यां गान्धर्विकया कथं कृष्णो ब्रह्मचारीति पृष्टो दुर्वासाः प्रत्यवोचत्। यो ह वै कामेन कामान् कामयते सकामी भवति। यो ह वै त्वकामेन कामान् कामयते सोऽकामी भवतीति। अकामेन कामसदृशेन प्रेम्णेत्यर्थः। कृष्णाया द्रौपद्या च दुःशासनेन दुर्वाससा च कृतं व्यसनं विपत्तिं कर्षति वस्त्रार्पणेन चरुलग्नशाककणिका-भक्षणहेतुकेन जगत्तर्पणेन चाधःनयतीति सः। कृष्णायाः द्रौपद्याः "नीतीकणाद्राक्षासु योषितीति" मेदिनिकारः। व्यसनं विपदि भ्रंशे इत्यमरः। राजसूयसभायां युधिष्ठिरे सर्वाग्रतः पूजां कृतवति दुर्बाक्यान्युद्गिरतः शिशुपालस्य शिरः स्वेंगितप्रवृत्तेन चक्रेण छिनत्तीति तथा। द्रौपद्यपराधेन दुर्योधनकुलस्यान्तको विनाशकृदिति तथा ॥३१॥

**विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ।**
**सत्यवाक् सत्यसंकल्पः सत्यभामारतो जयी ॥३२॥**

विदुरायाक्रूराय च स्वैकान्तिने तद्गृहगमनादिलक्षणं वरं ददातीति सः । प्रशास्तृत्वप्रधानं सहस्र–शिरस्कं तेजोमयं विश्वात्मकं रूपं कुरुसदस्यर्जुने उत्कर्षौ च दर्शयतीति सः, सत्या तथ्या वाक् यस्य स सत्यवाक् , संकटस्थानेष्यनृतमकथयन्, "नानृतं हि वचो विप्र प्रोक्तपूर्वं मयानघेति" हरिवंशे नारदं प्रति तद्वाक्यात् । सत्यः फलवान् संकल्पो यस्य सः, "सत्यकामः सत्यसंकल्प" इति श्रवणात् । मानसक्रिययैव कोटि–संख्यानामण्डानां स्रष्टा, "सृजतोऽण्डानि कोटिश" इति स्मरणात् । अतिरूपगुणायां स्वैकान्तिन्यां सत्यभामायामतिमात्र–निविष्टचित्तत्वात्तदाज्ञावहत्वाच्च सत्यभामारतः । "त्वदीयोऽहं सदा देवि ख्यातो जगति किंकरः । ना ज्ञापयसि मां किं नु पुरेव वरवर्णिनीति" हरिवंशे रुष्टां तां प्रति तद्वाक्यात् । जयति तां स्मराभावेन वाञ्छितपूर्त्या वेति जयी ॥३२॥

**सुभद्रा पूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ।**
**जगद्गुरुर्जगन्नाथो वेणुवाद्यविशारदः ॥३३॥**

सुभद्रातः पूर्वं जातत्वात्तथा तद्भक्तिविषयस्तद्वत्सलश्चेत्यर्थः । निखिलव्यापित्वाद्विष्णुः,जिष्णुरितिपाठे त्वर्जुनात्मकः।योऽहंतमर्जुनं विद्धियोऽर्जुनःसोहमेव चेति"तद्वाक्यात्। स्वैकान्तिने भीष्माय मुक्ति प्रददाति निर्याणसमये तद् दृष्टिपथस्थः सन्निति सः । भीष्मे मुक्ते तदधिकारे तादृशं जीवान्तरमभिषिक्तमिति बोध्यम्।देवमानवादिनिखिलजगत्प्रतिहितोपदेशित्वाज्जगद्गुरुः । जगता जगद्वर्तिना देव–मानवादि–प्राणि–बृन्देनाभ्युदय–निश्रेयसार्थिना याचनीयत्वाज्जगन्नाथस्तत् प्रशास्तृत्वाद्वा । "नाथृनाधृयाच्ञोपतापैश्वर्याशीःष्विति" धातुपाठः । ब्रह्मादि–बिमोहने वंशीनादे पाण्डित्याद्वेणु-

वाद्यविशारदः 'सवनशस्तदुपधार्य सुरेशाः शक्र-सर्व-परमेष्ठि-पुरोगाः । कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः' इति श्रीशुकोक्तेः ॥३३॥

**वृषभासुरविध्वंसी बकासुरबलान्तकः ।**
**युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ॥३४॥**

वृषभाकारं विश्वभीषणमतिकायमतिविक्रममसुरं विध्वंसयन् निघ्नंस्तथा । गिरिसंनिभस्य बकासुरस्य बलान्तो विक्रमो विनाशो यस्मात् स तथा वीरणातृणवद्यस्तादृशं बकदानवं विदारितवानित्यर्थः । युधिष्ठिरं स्वैकान्तिनं कपटद्युतकारिभिः शत्रुभिरपहृत्यराज्यं चिरारण्य-निवासकृशमतद्योग्यं राजेन्द्रं प्रतिष्ठापयति महाकपटिनोऽत्यधर्मिष्ठांस्तच्छत्रून्निखिलान्निहत्य सर्व-राजनमस्कृते महति राज्यासनेऽभिषिच्य निवेशयति तदाज्ञाविधारकः सन्निति तथा । बर्हिणो मयूरस्य बर्हश्चन्द्रकः सोऽवतंसः शिरोभूषणं यस्य स तथा । स्वर्णरत्नखचितशिखिचन्द्रकावतंसशोभितमौलिरित्यर्थः ॥३४॥

**पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ।**
**कालीयफणमाणिक्यरञ्जितश्रीपदाम्बुजः ॥३५॥**

पार्थस्यार्जुनस्य भारताहवे रथं वाहयन् पार्थसारथिः । इन्द्रियाग्राह्यत्वादव्यक्तः प्रत्यग्वपुरित्यर्थः । भक्त्युदितेन प्रसादेन तु व्यक्तोपि । यदाह नारायणीये भीष्मः—"प्रीतस्ततोस्य भगवान् देवदेवः सनातनः । साक्षात्तं दर्शयामास सोऽदृश्योऽन्येन केनचिदिति" । तमुपरिचरवसुं प्रयात्मानमिति शेषः । गीताशास्त्राधारत्वाद् गीतामृतमहोदधिः । कालीयस्यातिविषवलस्य महाकायस्य नागस्य फणेषु यानि माणिक्यानि तैस्तत्कान्तिभी रञ्जिते द्विगुणारुण्यनीते श्रीपदाम्बुजे चरणतले यस्य सः । दीर्घ-मध्योपि

कालिय-शब्दो वोध्यः। नागे कालीय-कालियाविति शब्दभेद-प्रकाशात् ॥३५॥

**दामोदरो यज्ञ-भोक्ता दानवेन्द्रविनाशनः।**
**नारायणः परब्रह्म पन्नगाशनवाहनः ॥३६॥**

स्तन्यं पिबन्तमतृप्तं पुत्रं विहाय तत् पेयस्योत्सिच्यमानस्य दुग्धस्य रक्षणाय गतयागत्य च दध्यादि-भाजनानि कुपितेन तेन भग्नानि वास्तूनि च दध्यादि-वीचिमंति पश्यन्त्या यशोदया जन्मादुर्दान्तोऽयं दमनीय इति बुद्ध्या दामभिरुदरे निबद्ध इति दामोदरः। "स च तेनैव नाम्नात्र कृष्णो वै दाम बन्धनात्। गोष्ठे दामोदर इति गोपीभिः परिगीयत" इति श्रीहरिवंशात्। श्रीराधया खण्डितयोदरे काञ्ची दाम्नानि वद्धत्वात्तथेत्यपरे। यदुक्तम्—"संकेतावसरेच्युते प्रणयतः संरब्धया राधया प्रारभ्य भ्रुकुटिं हिरण्य-रसना दाम्ना निवद्धोदरम्। कार्तिक्यां जननी-कृतोत्सवत्ररप्रस्तावन पूर्वकं च दूनि प्रथयँस्तमातपुलकं ध्यायेम दामोदरमिति"। यज्ञानां स्वभक्तैरनुष्ठीयमानानां पालनात्तेषु हविर्भोजनाच्च यज्ञभोक्ता। "भोक्तारं यज्ञतपसामित्यादि" तद्वा-क्यात्। दानवेन्द्रान् केश्यादीन्निघ्नंस्तथा। कारणार्णवसमाश्रय-त्वान्नारायणः। "नारा आपः समाख्यातास्तासामयनमादितः। यतस्त्वं भूत-भव्येश त्वं नारायण-संज्ञित" इति श्रीहरिवंशे कृष्णं प्रति शिवोक्तेः। सर्वतत्त्वाश्रयत्वाच्च तथेत्यपरे। "नराज्जा-तानि तत्त्वानि नाराणीति विदुर्बुधाः। तस्य तान्ययनं पूर्वं तेन नारायणः स्मृत" इति स्मरणात्। परं ब्रह्मेति विशिष्टमेकं नाम। जीवे प्रधाने च ब्रह्म-शब्दोस्ति विज्ञानं ब्रह्म चेद्वेदेति। "तस्मादे-तद् ब्रह्म नाम रूपमन्नं च जायत" इति च श्रवणात्। तयोर्व्या-वृत्तये परमिति विशेषणम्। यत्र स्वरूपेण गुणैश्चानवधिकोऽति-

शयः स परब्रह्म शब्दार्थः स हि कृष्ण एव । पन्नगान् सर्पानश्नातीति पन्नगाशनो गरुडस्तद्वाहनं यस्य स तथा ॥३६॥

**जलक्रीडा–समासक्त–गोपीवस्त्रापहारकः ।**

**पुण्यश्लोकस्तीर्थपादो वेदवेद्यो दयानिधिः ॥३७॥**

कृष्णपतिलाभाय हेमन्तर्तावुषः स्नानपूर्वकं कृतदुर्गार्चनानां परित्यक्त–विषय–भोगानां व्रतोद्यापन–कामनयातिशीते यमुनाम्भसि स्नान्तानां व्रत–नैर्विघ्न्याभ्युदितातिहर्षेण जलक्रीडासु समासक्तानां गोपीनां यमुनातीर–स्थापितानि वस्त्राण्यकस्मादागत्यापहरति ताभिः साकमागामिन्यां शरदि रासक्रीड़ां प्रतिजानंस्तदभीष्टकल्पतरुरिति तथा । पुण्याः श्लोकाः कीर्तयः पद्यानि च यस्य सः पुण्यश्लोकः । "श्लोको यशसि पद्ये च"-इत्यमरः । तीर्थानि गंगादीनि यागाः शास्त्राणि च पादयोर्यस्य स तीर्थपादः । यत् पादाश्रितानां तीर्थफलानि भवन्तीत्यर्थः।"तीर्थ शास्त्राध्वर–क्षेत्रोपाय–नारी–रजस्सु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमंत्रिष्विति" मेदिनिकारः । वेदप्रतिपाद्यत्वाद्वेदवेद्यः । कृपार्णवत्वाद् दयानिधिः । निर्हेतुकरपरदुःखप्रहाणेच्छा हि दया । गोक्ष–रूपस्य दया फलं न तस्य प्रणतिमात्रेणार्पणादर्थतो निर्हेतुक्ये च साध्र्वस्य मणेर्मौल्याय कपर्दिका पर्याप्नोति ॥३७॥

**सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परम् ।**

**ॐ एवं श्रीकृष्णदेवस्य नाम्नामष्टोत्तरशतम् ॥३८॥**

स्वशक्त्या निखिलतीर्थरूपत्वान्निखिलग्रहरूपत्वाच्च सर्वतीर्थात्मकः सर्वग्रहरूपीच पदाश्रयिणां सर्वतीर्थफलं सर्वग्रहप्रसादश्चायत्नादेव भवेदिति भावः। शक्त्याश्रयभूतः परामयः स्वयं तु पराद् ब्रह्म रुद्रादेर्नित्य मुक्त-जीवव्यूहाच्च परः । "मत्तः परतरं नान्यत् किंचिदस्ति धनञ्जयेति"तदुक्तेः।ओमित्यंते च प्रणवोपन्यासात्ताभ्यां स्फुटिततयास्य पाठः । स्तोत्रं चैतन्मंत्ररूपं बोध्यते । इह केषांचिन्नाम्ना-

मर्थैक्येपि स्वरूपभेदान्न पुनरुक्तिः । अर्थपुनरुक्तिस्तु न दोषाय । सर्वेषां नाम्नां यशोदास्तनंधयैक-वस्तु-विषयत्वात् । उपसंहरत्येवमिति ।।३८।।

**कृष्णेन कृष्णभक्तेन श्रुत्वा गीतामृतं पुरा ।**

**स्तोत्रं कृष्णप्रियकरं कृतं तस्मान्मया श्रुतम् ।।३९।।**

नाम्नामाविर्भावे कारणं कालं चाह । कृष्णेनार्जुनेन । 'कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने' इति मेदिनिकारः। गीतामृतं श्रीकृष्णमुखतः श्रुत्वा तदर्थाननुभूय कृष्णस्य नामान्युक्तानि। तन्नामात्मकमिदं स्तोत्रं तस्मान्मया श्रुतं यदिदं त्वां प्रत्युक्तं हे धरणि । तत्र जन्म कर्म च मे दिव्यमिति कृष्णस्य जन्म कर्माणि नित्यानि दिव्यान्यवधार्य तत् प्रवृत्ति-निमित्तानि प्रायेणात्र नामानि वर्णितानि तानि च वसुदेवात्मज-नन्दगोपप्रियात्मज-पूतनाजीवितहर-षोडशस्त्रीसहस्रेशादीनि । यानि च कृष्ण-वासुदेव-परज्योतिरज-निरंजन-नारायण-परब्रह्मादिनि तानि तु ज्ञानं ज्ञेयमित्यादेः । ज्योतिषामपि तज्ज्योतिरित्यादेः अजोऽपि सन्नित्यादेर्दैवी ह्येषेत्यादेर्मम योनिरित्यादेः सर्वतः पाणीत्यादेश्च वर्णितानि । तानीमानि सर्वाणि कुशाग्रीयधीभिर्विमृश्यानीति।।३९

**कृष्णनामामृतं नाम परमानन्ददायकम् ।**

**अत्युपद्रवदुःखघ्नं परमायुष्यवर्धनम् ।।४०।।**

स्तोत्रस्यास्य नाम - निर्देशपूर्वकं मुख्यं फलमाह कृष्णनामेति । परमानन्दो निखिल-दुःख-विध्वंसपूर्वकः कृष्णांघ्रि-लाभलक्षणस्तं ददातीति तत् । सकामान् प्रवर्तयन्नानुषंगिकं फलमाह । अतीति । शत्रु-कृतेभ्यो राजकृतेभ्यश्चात्युपद्रवेभ्यो जातं दुःखं हन्ति विधिना जप्तं सदिति तथा । आयुरेवायुष्यं चातुर्वर्ण्यादित्वात् स्वार्थेष्यञ् । यदस्मै विधात्रायुर्दत्तं तच्चैतत् पाठाद्वर्धत इत्यर्थः ।।४०।।

**दानं व्रतं तपस्तीर्थं यत् कृतन्त्विह जन्मनि ।**
**जपतां शृण्वतां चैतत् कोटि-कोटि-गुणं भवेत् ॥४१॥**

यच्च दानादिकमिह जन्मनि तत्तदुक्त-फलकामनया कृतं तदेतत् स्तोत्रं जपतां शृण्वतां च कोटि-कोटि-गुणं स्यात् तत्तत् फलमपरिसंख्येयं भवेदित्यर्थः। तत्ताद्दानादि कर्तृभिस्तदानंत्येच्छुभिरिदं पाठ्यम् ॥४१॥

**पुत्र-प्रदमपुत्राणामगतीनां गतिप्रदम् ।**
**धनावहं दरिद्राणां जयेप्सूनां जयावहम् ॥४२॥**

पुत्रेति । अगतीनामशरणानां गतिप्रदं शरणदातृ। एतत् पाठाज्जयो निर्भयः स्यादाश्रित-वज्र-दुर्गवदित्यर्थः ॥४२॥

**शिशूनां गोकुलानां च तुष्टिदं पूर्णपुण्यदम् ।**
**बालरोग-ग्रहादीनां शमनं शान्ति-मुक्तिदम् ॥४३॥**

शिशूनामिति । कृशशिशवो गावश्चैतत् पठतां पुष्टा भवन्ति कार्श्य-दोषास्तेषां विनश्येयुरित्यर्थः। पूर्णं महत् पुण्यं च तत् पोषात् पठद्भ्यो दद्यात्। बालानां ये रोगा ये च तेभ्यः कुपितग्रहा राहुप्रभृतयस्तेषां शमनं नाशकं प्रसादकं च विधिना पठितं सद्भवति। शान्तिमिन्द्रियसंयम मुक्तिं च देहदैहिक-ममताच्छेदं ददात्यनुषंगात् ॥४३॥

**समस्तकामदं सद्यः कोटिजन्माघनाशनम् ।**
**अन्ते कृष्णस्मरणदं जन्म-ताप-त्रयापहम् ॥४४॥**

भक्तानां तु सर्वार्थ-साधकमिदमित्याह समस्तेत्यादिभिः। त्रिविधाः खलु हरेर्भक्ताः। सनिष्ठ-परिनिष्ठित-निरपेक्षभेदात्। तेषु स्वर्गादि-लोकानपि दिदृक्षुर्ह्यर्चनरूपान् स्वधर्मानपि निष्ठयाचरन् प्रथमः, लोकसंजिघृक्षया तानाचरन् हरिभक्तिनिरतो द्वितीय, च स च साश्रमः। सत्य-तपो-जपैर्विशुद्धा हर्येकनिरतस्तु तृतीयो

निराश्रम इति-सूत्र-भाष्यादिषु विस्फुटम्। तत्र परिनिष्ठितश्चेदेतत् पठेत्तर्हि तस्य समस्तान् कामनिष्ठान् भक्तिभेदान् ददाति नैर्विघ्न्येन संपादयति। सद्यः संकल्पितपाठादनन्तरम्। सद्यः पाठकाल एव कोटि-जन्म-संचितान्यघानि पापपुण्य-रूपाणि नाशयति वह्निरिवेषीकतूलानि। अन्ते प्राणोपक्रमकाले कृष्णं स्मारयति विवशमपि तं तदा कृष्णं संस्मार्य विमोहयति। एवं जन्म च मातृगर्भ-निर्गम-लक्षणं तत् तापत्रयं चाध्यात्मिकादि-लक्षणं तस्यापहन्ति। स लब्धकृष्णांघ्रिः पुनः संसारं नश्यतीत्यर्थः। तेष्वाध्यात्मिकस्तापः शारीर-मानस-भेदेन द्विविधः। वातपित्त-वैषम्य-हेतुकः शारीरः। कामक्रोधादि-हेतुकस्तु मानसः। मनुष्य-पश्वादि-हेतुक आधिभौतिकः। यक्षराक्षसग्रहाद्यावेशहेतुक आधिदैविकः। एष त्रिविधस्ताप एतत् स्तोत्रजपाद्विनश्यतीति ॥४४॥




**कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने।**
**नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने ॥४५॥**

स्वयं भगवत् कृष्ण–देवता–प्रतिपादकं पौराणं मंत्रमाह कृष्णायेति। यशोदासुतायेत्यर्थः। एवमाह लक्ष्मीधरः "तमालश्यामलत्विषि यशोदास्तनंधये कृष्णशब्दस्य रूढ़ि"रिति। यादवेन्द्राय देवकीसुताय, ज्ञानमुद्राय ब्रह्माणमर्जुनमुद्धवं च प्रति रहस्योपदेष्ट्रे जगद् गुरवे इत्यर्थः। योगिने नित्यं पार्षदसाहित्यवते, श्रीराधादीनां बल्लवीनां नाथाय स्वामिने, रुक्मिण्यास्तदुपलक्षितानां भामादीनां चेशाय पत्ये, वेदान्तैर्वेदो ज्ञानं यस्य भवति तस्मै वेदान्तवेदिने, "नमो वेदान्तवेद्यायेति" श्रुतेः। ननु यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति तस्य वागविषयत्वमुक्तम्। मैवम्। कात्स्न्येन तदगोचरतायास्तत्रोक्तेः। कात्स्न्येन नाजोप्यभिधातुमीशः इति स्मृतेः। अप्राप्येत्यनेनापि तत् प्रत्ययाच्च ॥४५॥

**इमं मंत्रं महादेवि व्रजंस्तिष्ठन् दिवानिशम् ।**
**मनसा चिन्तयन्नित्यं जपशुद्धः शरीरभाक् ॥४६॥**

हे महादेवि धरणि ! पठितस्तोत्रे निरपेक्षः परमैकान्तितां व्रजन् पवित्रे देशे तिष्ठन् दिवानिशं दिने रात्रौ चेमं मंत्रं मनसा नित्यं प्रतिक्षणं चिन्तयन् जपेन शुद्धो विनष्टवासनः शरीरभाक् प्राप्तपार्षदतनुर्भवति विमुक्तिमेतीत्यर्थः ॥४३॥

**सर्वग्रहानुग्रहभाक् सर्वप्रियतमो नरः ।**
**पुत्रपौत्रैः परिवृतः सर्वसिद्धिसमृद्धिमान् ॥**
**निर्विश्य भोगानन्ते च कृष्णसायुज्यमाप्नुयात् ॥४७॥**

अथ सनिष्ठश्चेदं स्तोत्रं पठन् जीवद्दशायां सर्वेषां क्रूराणां ग्रहाणामनुग्रहं प्रसादं भजति । सर्वेषां राजादीनां च प्रियतमो भवति । पुत्रैः पौत्रैश्च शिष्यैः प्रशिष्यैश्च परिवृतः सर्वाः सिद्धिः समृद्धीश्चोपैति । स्वर्गादि-लोके भोगान्निर्विश्य भुक्तान्ते कृष्णेन परमव्योमाधिपति-वेशेन सायुज्यं सहयोगमाप्नुयाद् विन्देत् । "निर्वेशो वेतने भोगे" इति श्रीधरः । सह युनक्ति सहयुक् तस्य भावः सायुज्यम् ॥४७

**शंखचक्रगदापाणे द्वारकानिलयाच्युत ।**
**गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥४८॥**

इतिश्रीब्रह्माण्डपुराणे धरणीशेषसंवादेश्रीकृष्णाष्टोत्तरशतनामस्तोत्रं

श्रीशेषदेवः स्वप्रपत्तिं करोति तामन्यान् शिक्षयन् शंखेति । हे गोविन्द व्रजनाथ मां रक्ष संसारकालव्यालात् त्रायस्व । स्फुटार्थमन्यत् ॥४८॥

**सद्वृत्त-रत्न-पूर्णो ब्रह्माण्ड-क्षीरधिर्जीयात् ।**
**कृष्णाष्टोत्तरशतकस्तोत्रामृतमुद्बभूव यतः ॥**
**श्रीराधादामोदरशिष्यो वृन्दावनाभिधो विप्रः ।**
**अष्टोत्तरशतनाम्नि व्यधात् सतां प्रीतये भाष्यम् ॥**

इति श्रीकृष्णाष्टोत्तरशतनामस्तोत्रस्य भाष्यं पूर्तिमगात् ॥

॥ ॐ नमः कृष्णाय ॥ (१)

# ❀ श्रीगोपालस्तवराजः ❀

सर्वेश्वरः प्रणतबन्धुरचिन्त्यशक्ति—
मेंघद्युतिर्बिधुमुखः कमलायताक्षः ।
स्वर्णाम्बरो व्रजजनैः समुपास्यमानो,
दीव्यद्बिभूषणगणः स चकास्ति कृष्णः ॥१॥

नित्यं निबसतु हृदये चैतन्यात्मा मुरारिर्नः ।
निरबद्यो निर्वृतिमान् गजपतिरनुकम्पया यस्य ॥२॥

श्रीनारद उवाच—

नवीननीरदश्यामं नीलेन्दिबरलोचनम् ।
बल्लबीनन्दनं वन्दे कृष्णं गोपालरूपिणम् ॥१॥

गोपालोपासनादेशिको भगवन्नारदो गोपालस्य स्तुतिमाह-शान्त-दास्य-सख्य-बात्सल्योज्ज्वलानुभविनः कृष्णस्य पञ्चबिधा भक्ता भबन्ति । यशोदातो जाते हि कृष्णे सर्वेऽन्ये तस्मिन् स्व-स्वरसमनुभवेयुरतस्तस्य तयोपास्यतां तावदाह-नबीनेति, कृष्णमहं बन्दे, कृष्णं बिज्ञानानन्दघनम्,"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिबाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इति स्मरणात्परमपुमर्थभूतमित्यर्थः । कथंभुतमित्याह-गोपालेति, गोपालस्य यद्रूपं बेणु-वेत्र-शृंगधारणहेतुकं सौन्दर्य्यं, तदस्य नित्यं प्रशस्तं चास्तीति तम् । "रूपं प्रभावे सौन्दर्य्ये" इति विश्वः । श्रुतिश्चैवमाह बेणुशृंगधरं तु बेति । नित्यसिद्धप्रशस्तगोपालबेशमित्यर्थः । न च बेशेनैवासौ गोपालोऽपि तु गोपालबंशजातत्वा-

(१) श्रीराधाश्यामसुन्दरदेवौ जयतः ।

च्चेत्याह बल्लबीति । बल्लबस्य ब्रजेश्वरस्य नन्दस्य पत्नी बल्लवी श्रीयशोदा तस्या नन्दनमर्भकम् । "नन्दनो दारकोऽर्भक" इति धनञ्जयः । देवक्यामिब यशोदायाञ्च हरिर्जात इत्याह श्रीशुकः। "निशीथे तम उद्भूते जायमाने जनार्द्दने । देबक्यां देबरूपिण्यां बिष्णुः सर्व्वगुहाशयः । आबिरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कल" इति । निशीथेऽर्द्धरात्रे देवक्यां यशोदायां जनार्द्दने लीला-पुरुषोत्तमे जायमाने सति देवक्यां देवकपुत्र्यां बिष्णुराबिरासीदिति तत्रार्थः । यशोदापि देबकीत्युच्यते । "द्वे नाम्नी नन्दभार्य्याया यशोदा देबकीति च" इत्यादिपुराणात् । अग्नौ च "यशोदा नन्द-पत्नी च जातं परमबुध्यत । न तद्वेद परिश्रान्ता निद्रयापगतस्मृति रिति" तल्लिंगमिति क्वचित्पाठः । बसुदेवपत्नीव नन्दपत्नी च परं परमेश्वरमेव स्वगर्भाज्जातमबुध्यत । तद्वसुदेबागमादिकं पाठान्तरे तस्य तदागमादेर्लिंगं चिन्हंच न बेद नाबुध्यत बेत्यर्थः। तत्र हेतुः परीत्यादि । आदिपुराणे तु स्फुटमाहैबं नारदः "नन्द-गोपगृहे जातो यशोदागर्भसम्भव" इति । इत्थञ्च "नन्दस्त्वात्मज उत्पन्ने" इत्यतानुजा बिष्णोरित्यादिकं सूपपन्नम् । उपगुह्यात्मजा-मित्यादिबद्गौणात्मजत्वशंका च दूरतोत्सारिता । देबकीपुत्रस्य यशोदापुत्रे ऐक्यात्तदैक्यबतस्तस्य मथुरादौ गमनादन्तरान्तरा गोष्ठे चागमनात् । श्रीदशमस्कन्धस्य प्रकटार्थेऽपि न सन्देहः । एवं बर्णनं च श्रीमुनीन्द्रस्य भगबद्रहस्यानुयायित्वादुपयुक्तम् । रूपमा-कृतिं च बोधयतु बिशिनष्टि, नबीनो बर्षुको यो नीरदः स इब श्यामस्तम् । उपमानानि सामान्यबचनैरिति सूत्रात्समासः । रस-वर्षिणं तापनिबर्त्तकं चेत्यर्थः। नीले इन्दीबरे इब लोचने यस्य तम् यद्यपीन्दीबरशब्दादेब नैल्यं प्राप्तं तथापि साञ्जनत्वबोधनाय नीलशब्दः कज्जलरेखाञ्चितप्रान्तेन्दीबरपत्रनेत्रमित्यर्थः ॥१॥

**स्फुरद्बर्हदलोद्बद्धनीलकुञ्चितमूर्द्धजम् ।**
**कदम्बकुसुमोद्भासिबनमालाबिभूषितम् ॥२॥**

अथ दासादिसर्बभक्तोद्दीपनेन बेषेण भूषणेन च विशिष्टं कृष्णं बर्णयति स्फुरदिति त्रिभिः । स्फुरता कान्तिमता बर्हदलेन शिखिपिंछेनोद्बद्धा बिशिष्टाः, यद्वा तेन बिशिष्टा उच्चतया जूट-भावेन निबद्धा नीलाः चिक्कणातिश्यामाः कुञ्चिताः कुटिलाश्च मूर्द्धजाः केशा यस्य तम् । चन्द्रकोज्ज्वलकेशजूटमित्यर्थः । कदम्ब-कुसुमैर्नीपपुष्पैरुद्भासिन्या वनमालया बिभूषितं शोभितम् ॥२॥

**गण्डमण्डलसंसर्गिचलत्काञ्चनकुण्डलम् ।**
**स्थूलमुक्ताफलोदारहारोद्द्योतितबक्षसम् ॥२॥**

गण्डमण्डलयोः संसर्गः संबन्धो बिद्यते ययोस्तादृशे चलंती दोलायमाने काञ्चनजटिते मकराकारे कुण्डले कर्णभूषणे यस्य तम् । स्थूलैरतिकान्तिभिर्बर्त्तुलपुष्टैर्मुक्ताफलैरुदारा महान्तः स्व-भक्तानन्ददातरो बा ये हारास्तैरुद्योतितमतिशोभितं बक्षो यस्य तम् । "उदारो दातृमहतो" रित्यमरः । यद्यपि हारशब्दो मुक्ता-स्रजि वाचकः, हारो मुक्तावलाविति बिश्वकोशात्तथापि मुक्ताशब्दो रत्नान्तरासंपर्कबोधाय ॥३॥

**हेमांगदतुलाकोटीकिरोटोज्ज्वलबिग्रहम् ।**
**मन्दमारुतसंक्षोभबल्गिताम्बरसञ्चयम् ॥४॥**

हेमजटिते ये अंगदे केयूरे ये च तुलाकोट्यौ नूपुरे यच्च किरीटं मुकुटं तैरुज्ज्वलोऽतिकान्तिमान् बिग्रहो मूर्त्तिर्यस्य तम् । केयूरमङ्गदं तुल्ये इति । पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरो स्त्रियामिति । मुकुटं किरीटं पुंनपुंसकमिति चामरसिंहः । मन्देति बिस्फुटार्थम् ॥४॥

**रुचिरौष्ठपुटन्यस्तवंशीमधुरनिस्वनैः ।**
**लसद्गोपालिकाचेतो मोहयन्तं मुहुर्मुहुः ॥५॥**

अतिमनोहरमूर्त्तर्बेशभूषणैरुल्लसत्कान्तेर्गोपालस्य श्रीकृष्णस्य स्वानुरूपगुणाभिः स्वकान्ताभिर्गोपालीभिः श्रीराधादिभिः सह लीलां बर्णयन् तं विशिनष्टि रुचिरेति सार्द्धत्रिभिः । रुचिरेऽतिरम्ये ओष्ठपुटे न्यस्तार्पिता या बंशी तस्या मधुरैः स्वादुभिर्निस्वनैर्नादैर्गोपालिकानां चेतो हृदयं मुहुर्मुहुरसकृन्मोहयन्तं बशीकुर्ब्बन्तम् । चेतः कथंभूतम् ? लसत् गोपालविषयकेनानुरागेण भ्राजमानम् ॥५॥

**बल्लबीबदनाम्भोजमधुपानमधुव्रतम् ।**
**क्षोभयन्तं मनस्तासां सुस्मेरापाङ्गबीक्षणैः ॥६॥**

बल्लबीनां तासां यानि बदनाम्बुजानि तेषु लाबण्यरूपाणि यानि मधूनि मकरन्दास्तेषां पाने मधुव्रतं भृंगम्, तत्पानेऽतिसतृष्णमित्यर्थः । रूपकेणोपमात्र व्यज्यते । सुस्मेरयोः सुस्मितबतोरपांगयोः नेत्रान्तयोर्बीक्षणैः कटाक्षमालया तासां मनः क्षोभयन्तं चपलीकुर्ब्बन्तम् ॥६॥

**यौबनोद्भिन्नदेहाभिः संसक्ताभिः परस्परम् ।**
**बिचित्राम्बरभूषाभिर्गोपनारीभिराबृतम् ॥७॥**

पुनः किम्भूतं ? गोपनारीभिः प्रियाभिस्ताभिराबृतम्, परिबेष्टितम्, कथंभूताभिः यौबनोद्भिन्ना देहा मूर्त्तयो यासां ताभिस्तारुण्यपूर्णाभिरित्यर्थः । परस्परं संसक्ताभिर्मिथो गृहीतहस्ताभिः, बिचित्रा अम्बर-भूषा यासां ताभिः । तत्राम्बराणि अन्तरीयोत्तरीयं कंचुलिकास्तानि बहुबर्णत्वाद्बिचित्राणि भूषाश्चाबतंस–नासाभूषण–हार–केयूर–कंकण-किङ्किणी - नूपुराणि ताश्च स्वर्णरत्न-जटितत्वाद्बिचित्राः ॥७॥

**प्रभिन्नाञ्जनकालिन्दीजलकेलिकलोत्सुकम् ।**
**योधयन्तं क्वचिद्गोपान् व्याहरन्तं गवां गणम् ॥८॥**

प्रभिन्नं दलितं यदञ्जनं कज्जलं तत्सदृशं यत् कालिन्दी-जलं तस्मिन् संभोगानन्तराया यन्त्रादिना केलिकलास्तत्रोत्सुक-मुद्युक्तम् । इष्टार्थोद्युक्त उत्सुक इत्यमरः । अथ सखिभिर्दासैश्च सह बिहारं बर्णयंस्तं विशिनष्टि योधयन्तमिति सार्द्धाभ्याम् । क्वचित् कदाचित् समये गोपान् योधयन्तं वाहुयुद्धेन क्रीडयन्तम् । क्वचिद्विदूरप्रसृतानां गवां धेनूनां गणं हे हंसि हे शबलीत्यादि तत्तन्नामभिर्व्याहरन्तमाह्वयन्तमित्यर्थः ॥८॥

**कालिन्दीजलसंसर्गशीतलानिलकम्पिते ।**
**कदम्बपादपच्छाये स्थितं बृन्दाबने क्वचित् ॥९॥**

क्वचित्समये तैस्तैश्च सह वृन्दाबने स्थितमासीनम् । तस्मिन् कथंभूत इत्याह—कालिन्दीजलसंसर्गित्वाच्छीतलेनानिलेन कम्पिते किञ्चिच्चञ्चलतरुबल्लीके इत्यर्थः । कदम्बपादपैर्नीपतरु-भिश्छाया आतपाभाबो यत्र तस्मिन् । “छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातप” इत्यमरः तैश्छाया कान्तिर्यस्य तस्मिन्नित्यन्ये। यद्वा बृन्दाबने कदम्बपादपच्छाये स्थितमिति ब्यधिकरणे सप्तम्यौ। कदम्बतरुणां निबिडानां छायायां स्थितमित्यर्थः । छाया वाहुल्ये इति सूत्राच्छायांतस्य तत्पुरुषस्य पूर्वपदार्थबाहुल्ये क्लीवत्वम् कालिन्दीति द्वयोर्विशेषणम् ॥९

**रत्नभूधरसंलग्नरत्नासनपरिग्रहम् ।**
**कल्पपादपमध्यस्थहेममण्डपिकागतम् ॥१०॥**

रत्नमयो यो भूधरो गिरिर्गोबर्द्धनस्तत्संलग्नं तद्वर्त्ति यद्रत्न-निर्म्मितमासनं पीठं तत् परिगृन्ह्यात्यध्यास्ते छत्रचामरकरैः पार्ष-दैरुपास्यमानः सन्निति तं राजलीलमित्यर्थः । दिव्यरसगन्ध-बासो

भूषणफलानां कल्पपादपानां मध्ये स्थितायां हेममण्डपिकायां गतं कदाचिदवस्थितम्। तस्यां स्थित्वा प्रियनर्म्मवयस्यैः सह स्व-रहस्यसिद्धिं विमृशन्तमित्यर्थः ॥१०॥

**बसन्तकुसुमामोदसुरभीकृतदिङ्मुखे।**
**गोबर्द्धनगिरौ रम्ये स्थितं रासरसोत्सुकम् ॥११॥**

वासन्तिकविपिनलक्ष्मीसमुद्दीपितरासरसाभिलाषिणं प्रियनर्म्मसखैरुपास्यमानं कृष्णं बर्णयति। बसन्तेत्येकेन। गोवर्द्धनगिरौ स्थितमुपबिष्टम्। कीदृशे? बसन्तकालोद्भवानां नानाबिधानां कुसुमानामामोदैरतिमनोहरैर्गन्धैः सुरभीकृतानि सुगन्धितानि दिङ्मुखानि दिशा येन तस्मिन्। अतो रम्ये मनोज्ञे, कीदृशं रासरसाय गोपाङ्गनाभिः सह नृत्य-गीताद्यानन्दायोत्सुकमुद्युक्तम् ॥ ११ ॥

**सव्यहस्ततलन्यस्तगिरिवर्य्यातपत्रकम्।**
**खण्डिताखण्डलोन्मुक्तमुक्तासारघनाघनम् ॥१२॥**

आगन्तुकबिपद्विनाशेन दासादिनिखिलभक्तसुखदं तं बर्णयन् बिशिनष्टि सव्येति—सव्यहस्ततले बामपाणेरुपरि न्यस्तं धृतं गिरिवर्यरूपमातपत्रं छत्रं येन तम्। गिरिबर्यो गोबर्द्धन एब शक्रकृतबिपत्तापत्रायकत्वादातपत्रम्। ब्यङ्ग्यं स्फुटयन्नाह-खण्डितो दूरीकृत आखण्डलोन्मुक्तोमूक्तासारश्च घनाघनो येन तम्। आखण्डलेनेन्द्रेण मुक्तश्छिन्नबन्धनः मुक्तस्त्यक्त आसारो धारासंपातो येन स मुक्तासारः घनाघनो बर्षुको मेघः। "शक्रघातुकमत्तेभ—बर्षुकाब्दा घनाघना" इत्यमरः। स्वपूजाबिध्वंसकुपितादैश्वर्य्यमत्तादिन्द्राद्ब्रजजनान् परित्रातुं तमुपहसितुं धृतशैलं तैर्निर्निमेषैर्निपीयमानमाधुर्य्यामृतं तान् युगपद्वीक्ष्य प्रहृष्यन्तमित्यर्थः ॥१२॥

**बेणुबादद्यमहोल्लासकृतहुंकारनिस्वनैः ।**
**सवत्सैरुन्मुखैः शश्वद्गोकुलैरभिबीक्षितम् ॥१३॥**

अथ मातृभावनिभृतधेनुबृन्दानन्दकतां बर्णयन् तं बिशिनष्टि वेणिवति । गोकुलैर्धेनुबृन्दैः स्फुटार्थद्वयम् ॥१३॥

**कृष्णमेबानुगायद्भिस्तच्चेष्टावशबर्त्तिभिः ।**
**दण्डपाशोदयतकरैर्गोपालैरुपशोभितम् ॥१४॥**

अथ पीठमर्द्दसखोपास्यतां (१) बर्णयन् बिशिनष्टि कृष्णमेबेति। प्रौढैर्महाबलैर्गोपाभैरुपशोभितम् । रक्षकैस्तैरुपास्यमानमित्यर्थः । किंभूतैः कृष्णमेबानु निरन्तरं गायद्भिः, अनुरागेण तद्गुणान् कीर्त्तयद्भिस्तदेकान्तिभिरित्यर्थः । तच्चेष्टेति, तदिच्छानुसारिभिरित्यर्थः । दण्डयन्ते दुर्वृत्ता यैस्ते दण्डा यष्टयः खड्गधनुबाणादयश्च तैः पाशैश्चोद्यताः कराः पाणयो येषां तैः कृष्णद्विषि विध्वंसने यम-वरुण-तुल्यैः कृष्णरक्षायै धृतशस्त्रास्त्रैरित्यर्थः ॥१४॥

**नारदाद्यैर्मुनिश्रेष्ठैर्बेदबेदाङ्गपारगैः ।**
**प्रीतिसुस्निग्धया बाचा स्तूयमानं परात्परम् ॥१३॥**

अथ शान्तिमिश्रदास्यैः केवलशान्तिमद्भिश्चोपास्यतां बर्णयति—नारदेति । नारदपराशरादिभिर्वशिष्ठवामदेबादिभिश्च मुनिश्रेष्ठैर्वेदलक्षणाया वाचा स्तूयमानं, वाचा किंभूतयेत्याह प्रीतिति । बिज्ञानानन्दसान्द्रः परमात्माऽयमिति प्रेमनिषिक्तयेत्यर्थः । तैः किंभूतैरित्याह—बेदेति सार्बभौमैरित्यर्थः । ननु यशोदात्मजं तं तेऽपि कथं स्तुवन्ति ? तत्राह—परात्परमिति । परादब्रह्मरुद्रादेर्नित्यमुक्ताच्च गरुडबिष्वक्सेनादेः परं श्रेष्ठं सर्बो-

(१) पीठमान् ।

त्तममित्यर्थ । सार्वभौमैर्महामुनिभिः सर्वेश्वरत्वेनानन्दचिन्मूर्त्तित्वेन निरूपितमित्यर्थः ॥१५॥

**य एवं चिन्तयेद्देवं भक्त्या संस्तौति मानवः ।**
**त्रिसन्ध्यं तस्य तुष्टोऽसौ ददाति वरमीप्सितम् ॥१६॥**

स्तोत्रपाठफलमाह य इति । एवमुक्तलक्षणः यो देवं चिन्तयेत् भावयेत्, त्रिसन्ध्यमेतेन स्तोत्रेण यः स्तौति तस्य तुष्टः सन्नसौ देव इप्सितं निश्रेयसं पार्षदभावं च वरं ददाति ॥१६॥

**राजवल्लभतामेति भवेत्सर्वजनप्रियः ।**
**अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवम् ॥१७॥**

❀ इति श्रीगौतमीयतन्त्रे श्रीगोपालस्तवराजः सम्पूर्णः ❀

अथ सकामान् प्रवर्त्तयन्नानुषङ्गिकं फलमाह—त्रिसन्ध्यमेतं स्तवं य पठति धृत-नियमः सन् स राज्ञां वल्लभो भवति, सर्वेषां जनानां प्रियो भवति शत्रवोऽपि तस्मिन् प्रीयन्ते । अचलां स्थिरां श्रियं राजादिभिरर्पितामाप्नोति । सम्पत्तिस्तस्य कदापि न क्षीयत इत्यर्थः । यस्तत् स्तवपाठकृत् स वाग्मी पण्डितश्च जायते, एतत्पाठमहिम्ना लक्ष्मी-सरस्वत्यौ च सापत्न्यं हित्वा तस्मिन्निवसत इत्यर्थः । ध्रुवं निश्चलमेतत् । एतत्पाठलभ्यतयोक्तेऽस्मिन् फलप्रचये सन्देहगन्धोऽपि न विधेयः । पठित्वैवैष तत्तत् फलदः परीक्षणीय इति भावः ॥१७॥

**श्रीराधादामोदरशिष्यो वृन्दावनाभिधो विप्रः ।**
**गोपालस्तवराजे भाष्यं व्यतनोत्सतां प्रीत्यै ॥**

इति श्रीगोपालस्तवराजभाष्यं पूर्तिमगात् ॥
श्रीहरये नमः ॥ श्रीश्यामसुन्दरजी ॥



# — श्रीलाडिलेयाष्टकम् —



श्रीमद्व्रजेशतनयं धृतमानवाङ्गं
सर्वाङ्गसुन्दरवरं कटिपीतवस्त्रम् ।
ब्रह्मादिदेवमुनिवन्द्यपदारविन्दं
श्रीलाडिलेयललितं सततं भजामि ॥१॥

तिर्य्यंग् किरीटमुकुटं बनमालया वै
संशोभमानवपुषं हसतेक्षणाढ्यम् ।
देदीप्यमानमकराकृतिकुंडलं च
श्रीलाडिलेयललितं सततं भजामि ॥२॥

आनम्रजानुयुगलं व्रजभूमिकाया--
मुत्थाय दक्षिणकरं ससरीसृपन्तम् ।
पादारविन्दयुगले धृतनूपुरञ्च
श्रीलाडिलेयललितं सततं भजामि ॥३॥

कौमारदर्शितसुखं वपुषा स्वपित्रो
र्वालैश्च क्रीडनपरं समुदारयन्तम् ।
मुग्धस्मितं निजभुजे धृतमोदकञ्च
श्रीलाडिलेयललितं सततं भजामि ॥४॥

श्रीमद्बलानुजमतीव प्रियस्वरूपं
सौख्यप्रदं निजजनानतिमानयन्तम् ।
श्यामाङ्गमद्भुततरं सुमुखं सुनेत्रं
श्रीलाडिलेयललितं सततं भजामि ॥५॥

सुभ्रुं नसं सुभुजदण्डपरागदामं
ब्रष्ट्रवयरूपमसितेक्षणचारुहासम् ।

—श्रीगोवर्द्धनभट्टग्रन्थावली ।।=)
—सहस्रनामत्रयम् अथवा ग्रन्थरत्ननवकम् ।।)
—श्रीनारायणभट्टचरितामृतम् (श्रीजानकीप्रसादगोस्वामिकृत)।।
—उद्धवसन्देशः (श्रीमद्रूपगोस्वामिविरचितः) ।=)
—हंसदूतम् (श्रीमद्रूपगोस्वामिविरचितम्) २।।)
—श्रीमथुरामहात्म्यम् (श्रीमद्रूपगोस्वामिविरचितम्) ।।=)
—मुरलीमाधुरी ( संचित ) ।')
—राधाकृपाकटाक्षस्त्रोत्रम् =)
—श्रीपदांकदूतम् ( श्रीकृष्णदेवजी कृत ) ।।)
—श्रीशुकदूतमहाकाव्यम्(श्रीनन्दकिशोरगोस्वामि कृतम्) १।।)
—ग्रन्थरत्नत्रयम् ।।)
] श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम् (श्रीबृन्दाबनदास कृत)
] श्रीगोपालस्तवराज ,,
] श्रीलाडिलेयाष्टकम् ( श्रीनारायणभट्ट कृत )


श्रीराधामाधव इलेक्ट्रिक प्रेस,
कालीदह मार्ग, वृन्दाबन
द्वारा मुद्रित


rdavandas

